सचित्रम्

# संस्कृत-पाठ्य-पुस्तकम्

## व्याकरणोपेतम्



### तृतीयो भागः

इंडियन प्रेस, लिमिटेड, प्रयागे मुद्रितम ।

१९२०

द्वितीयावृत्तिः ] [ मूल्यम् ॥=)

# विषय-सूची



## व्याकरणम्

विषयः पृष्ठम्



---



विहारप्रान्ते बेतियाः समीपस्थः लौरियाग्राम अशोकस्तम्भः ।

प्रथमः पाठः ।

# अशोकः सम्राट्

महाराजोऽयमशोकनामा मगधाधिपतेर्महाराजचन्द्रगुप्तस्य पौत्रो बिन्दुसारस्य पुत्रश्चाभूत् । कुसुमपुरं नाम नगरं यत्पाटलिपुत्रमपि कथ्यत एषां राजधानी बभूव । एष भूपालोऽशोक ईशातः सप्तत्यधिकद्विशतं वर्षाणि पूर्वं मगधसिंहासनमशूशुभत् । ततो नव वर्षानन्तरं कलिङ्गराजेन सार्धं तस्य युद्धं भवितुमारब्धम् । इतः पूर्वमशोकस्य स्वभावः क्रूरोऽभूत्, परन्तु तत्र युद्धे हताहतान् दृष्ट्वा म्रियमाणानां चार्तनादं निशम्यास्य हृदयमकस्मात् परिवृत्तम् । इत्थं दयार्द्रं जातं यत् तत एव कालादयं धर्मात्मा भूतेषु दयालुश्च जातः, स्वीचकार च बौद्धधर्मम् । अथानेकान् विहारानचीकरत् *, तत्र क्षपणकानां भोजनाच्छादनादिप्रबन्धं करोति स्म । ततोऽनेनानेकान्युद्यानान्यारोपितानि । मनुष्याणां पशूनाञ्च कृते सर्वत्र चिकित्सालयाः स्थापिताः । अथ स कापथान्, अपथांश्च सुपथान् कृतवान् । घण्टापथान् संसरणानि च राज्ये बहुशः कारितवान् । मार्गेषु संसरणेषु चोभयपार्श्वयोः पङ्क्तिबद्धाः सघनदलाः फलद्रुमाः समारोपिताः । एतत्तरुप्रच्छायशीतले पथि सूर्यातप-

---

* कारयति स्म ।

मवमत्य निदाघेऽपि पथिकाः चलन्त आसते स्म । प्रान्तरेषु, वर्त्मसु संसरणेषु च कूपिकाः कूपा वाप्यस्तडागाश्च कारिताः । कान्तारेष्वपि मार्गाञ्जलाशयाँश्च कारितवान् । समग्रे साम्राज्ये स्तूपेषु स्तम्भेषु शिलोच्चयशिलासु च धर्मस्य न्यायस्य च नियमान् लेखितवान् । एषां नियमानां पालनायाखिलः प्रजावर्गोऽशासि । एवंभूतास्स्तूपस्तम्भलेखास्त्वद्यापि दिल्ल्यां प्रयागे च मिलन्ति । तथा शिलालेखाः पेशावर † नगरस्य प्रान्ते, गुर्जरदेशस्य गिरिनारपर्वते, उडीसाख्यदेशे, दिल्लीतो जयपुरगामिनि घण्टापथेऽपि पर्वताङ्गेषु लिखिता दृश्यन्ते ।

अयमेतावान् महान् पार्थिव आसीत् यदस्य राज्यं पेशावरतो लङ्कापर्यन्तं उडीसातो गुर्जरदेशान्तं बभूव । सर्वत्रैषु स्तूपादिलेखेष्विम उपदेशा लिखिता आसन् । यत् ।

१ "स्वपित्रोराज्ञायां वर्तध्वम्" २ "बालकेषु मित्रेषु च दयां कुर्वीध्वम्" ३ "पशुषु करुणां कुरुत" ४ "कामक्रोधलोभमोहाहंकारान् जयत" इत्याद्यन्येऽपि बहवः ॥

लोके बौद्धधर्मप्रचाराय, प्रजास्वत्याचारवारणाय, सर्वेषां हितसिद्धये च सुयोग्या अधिकारिणो नियुक्ता आसन् । बौद्धविदुषां सभां कारयित्वा तद्धर्मतत्त्वस्य निर्णयं कारितवान् । मुखाग्रानुपदेशान् ग्रन्थेषु लेखितवांश्च ।

एष सम्राडेवंभूतो धर्मप्रिय आसीद्यत् प्राणाधिकप्रियं

---

† पूर्वकालेऽस्य नाम पुरुषपुरमासीत् ।

सहोदरं भ्रातरं महेन्द्रं* नाम्ना धर्मप्रचाराय लङ्कां प्रेषितवान्। तथा स्वस्वसारं संघमित्रां नाम राजकन्यां स्त्रीजने धर्मोपदेशार्थं तत्रैव प्रैषयत्। तत्रेमौ भ्रातरौ सफलायासावभूताम्। महेन्द्रस्य स्वसा संघमित्रा लङ्काप्रस्थानकाले तस्य वृक्षस्य शाखां सहात्मना नीतवती यस्य तले गौतमो बुद्धत्वं लेभे। सा शाखा लङ्कायामारोपिता मूलति स्म।

अद्यावधि वर्षाणां द्वे सहस्रे, द्वे शते, चतुष्टयं चैकं व्यतीतं किन्तु स वृक्षस्तथैव स्निग्धदलः सघनशीतलच्छायोऽधुनापि जीवँस्तिष्ठति पूज्यते च बौद्धैः श्रमणैः श्रावकैश्च। संसारेऽस्मिन्नियान् पुराणस्तरुर्नापरः कश्चित्॥

———

* पालीभाषायां महेन्द्रो महिन्दा संघमित्रा च संघमित्ता भवति।

द्वितीयः पाठः ।

# काश्मीरदेशः

भारतवर्षस्य पश्चिमोत्तरस्यां दिशि सीमायां महान् जनपदः काश्मीरदेशो व्यवस्थितोऽस्ति । तत्रत्यं जलानिलं स्वास्थ्यकरं यत्सेवनेन रोगिणोऽपि नीरोगा भवन्ति । वनेषूपवनेषु च शीतलो मन्दः सुगन्धश्च वायुर्वाति यः स्पर्शेन जनान् सुखयति प्रसादयति च मनस्तेषाम् । जलं मधुरं स्वादु शीतलं चास्ति । देशेऽत्र बहुधा पर्वताः सन्ति । तेषामन्तरे बह्व्यः समस्थल्यः समस्थलानि च प्राप्यन्ते । त उभे नोष्णे नातिशीते । किन्तु पार्वतप्रदेशोऽतिशीतलोऽस्ति । उपत्यकाधित्यकाचातीव हिमशीतला भवति । हेमन्तशिशिरयोर्ऋत्वोः शीतबाहुल्याज्जनो दिवापि ज्वलदङ्गारां हसन्तीं ग्रीवायामवलम्बमानां वहति । तत्र हिमानी च पतति । तदा प्रायः कोऽपि गृहान्न निःसरति । राङ्कवकम्बलाद्युष्णवस्त्रपरिधानो लोकोऽग्निसेवनेनैव कालं यापयति । एतद्देशीयाः पुरुषाः स्त्रियश्चातिगौरवर्णा भवन्ति ।

अत्रानेकाः सरितः सन्ति तासु वितस्था नाम सरिद्वरा महानदी वर्तते । पर्वतोद्भवस्तडागस्तत्र नाग इति कथ्यते । वाराही नागनाम्नः कासाराद् वितस्था प्रभवति । स नागोऽतलस्पर्शोऽगाधोऽस्ति । तस्योपकण्ठे निम्नद्धायां भूमौ शिवालय एकोऽतितरां शोभते । तत्र सुविशाला शिवमूर्तिर्विराजते । तीर्थब्राह्मणा अपि बहवो यात्रिणां धनदानबद्धस्पृहास्तिष्ठन्ति ।

अनन्तनागनाम्नो नगरात् श्रीनगरं यावत् पथिकाः प्रायो वितस्थायां नौभिरेव गमागमं कुर्वते । एता नौका ईदृग् विशाला भवन्ति यत् तासां मध्ये शयनागाराणि, स्वच्छानि नित्यकृत्यगेहानि, स्नाननिकेतनानि, पाकस्थानानि, भोजनभवनानि, गोष्ठीगृहाणि पृथक् पृथक् सुष्ठु निर्मितानि सन्ति । येन कतिपये विहारिणः श्रीमन्त आसु नौकास्वेव वसन्तो बहुतिथं कालं गमयन्ति ।

श्रीनगरं नाम नगरं काश्मीरदेशस्य राजधानी वर्तते । साम्प्रतं विशुद्धक्षत्रियवंश्यः धर्मात्मा श्रीमान् प्रतापसिंहो नाम तत्रत्यो महाराजोऽस्ति । सोऽयं श्रीमानुष्णकाले श्रीनगरं शीतकाले च जम्बूनगरं स्वकीयनिवासेन सुशोभयति ।

श्रीनगरस्य समीपे डलनामा पद्मिनीखण्डमण्डितो महानेकः कासारोऽस्ति तस्य जलं हरितमिव दृश्यते । तत्रैकं विचित्रं वस्तु विलोक्यते । यत् तत्र कासारजलपृष्ठे शाककृषिर्भवति । कथमिति चैतच्छृणुत । यद् विस्तीर्णकाष्ठफलकेषु हस्तमात्रोच्छ्रितां मृदमास्तीर्य तस्यामवकरं मेलयित्वा विविधशाकबीजान्युप्यन्ते । एवम्भूतानि शतशः क्षेत्राणि तस्मिन् महातडागे रज्जुभिर्बद्धानि प्लवन्ते । यस्य यावन्ति केदाराणि सन्ति तावन्त्येकत्रैव दृढरज्ज्वा मिथः तीरस्तम्भेषु बद्धानि सन्ति । तेषु नाना प्रकाराणि हरितकान्युत्पद्यन्ते प्राचुर्येण । विक्रीयन्ते च हट्टे । यदि कोऽपि चोरः क्षेत्रं चोरयितुमिच्छति तदा रज्जुं छित्त्वा फलकं नयति । इतिं क्षेत्रचौर्यं काश्मीरेष्वेव भवति नान्यत्र ।

बहुविधानि बहुतराणि च फलान्यत्र देश उत्पद्यन्ते सुदूरदूरञ्च

देशं प्रेष्यन्ते । तानि मिष्टानि मृदूनि स्वादूनि पुष्टिकृन्ति च भवन्ति ।

सर्वप्रकाराणि पुष्पाणि भवन्ति । जङ्गले क्रोशान् यावत् मल्लिका विकाशिता, सेवती* च प्रफुल्लिता दृश्यते । घ्राणतर्पणेन सुरभिणा गन्धेन काननं प्रपूर्यते । केसरमपि काश्मीर एवोत्पद्यत, अतएव तस्य नाम काश्मीरजन्मेति ।

अत्र तीर्थस्थानान्यनेकानि सन्ति, तेष्वमरनाथनामा महादेवो जगत्प्रसिद्धोऽस्ति । एतत् स्थानं हिमसंहतिमध्ये विद्यते । एतस्य मार्ग इयान् कठिनतरोऽस्ति यद् यात्रिणो राजसहायतां विना तत्र गन्तुं न शक्यन्ते । राजा राजपुरुषान् तेषां यात्रिणां सर्वथा साहाय्याय तैः साकं प्रेषयति तत्रैकस्यां गुहायां हैमं शिवलिङ्गं विराजते । तत् संपूज्य तस्मिन्नेव दिने प्रतिनिवर्तन्ते । श्रावणीपूर्णिमायां तत्रेयं मेला भवति ।

प्राचीनकाले देशोऽयं संस्कृतविद्यायाः केन्द्रस्थानमासीत् । अत्रैष पातञ्जलमहाभाष्यस्य भाष्यप्रदीपाख्यटीकाकारः कैयटः, तस्य भ्राता काव्यप्रकाशकृन्मम्मटः, कादम्बरीरचयिता बाणो नाम महाकविः, बृहत्कथामञ्जरीग्रन्थप्रणेता क्षेमेन्द्र, इत्यादयो बहवो धुरन्धरपण्डिताः समभूवन् । एतस्मिन्नेव देशे काश्मीरेतिहासस्य राजतरङ्गिणीनामकस्य रचयिता कल्हणपण्डित आसीत्, यस्य ग्रन्थस्य रचना ईशवीये द्वादशशतके श्रीहर्षराजस्य समये जाता ॥

---

* गुलाब इति हिन्दीभाषायाम् ।

तृतीयः पाठः ।

## गृहस्थः ।

१—गृहे तिष्ठतीति गृहस्थः । भार्या, जाया, पत्नी सहधर्मिणी, दाराः कुटुम्बिनी वा गृहस्थस्य मुख्यं गृहं कथ्यते । भार्या गृहं गृहस्थस्येति वचनात् । तस्यापरं गृहं तदस्ति यत्र स सपत्नीको वसति । तद् गेहं, वेश्म, सद्म, निकेतनं, सदनं, भवनं, आगारं, मन्दिरं चेति कथ्यते । सम्पन्नगृहस्थानां भवनं चतुःशालं भवति । तस्याङ्गणमजिरं बहु शोभते । स्त्रीणां गमागमार्थं प्राय एवंभूतेषु गृहेष्वन्तर्द्वारं भवति । तथा पश्चद्वारं बहूपयोगि भवति ।

२—गृहस्थगृहे यद्बहुतरं वस्तुजातमपेक्ष्यते, तत्र पर्यङ्का खट्वा वात्यावश्यकाः । यतः पल्यङ्कादीनामेवोपरि पुरुषाः, स्त्रियो, बाला, बालिकाः, शिशवः, स्तनंधयाश्च शेरते निषीदन्ति च यथावसरम् । मञ्चिकादीनि बहुविधान्यासनान्यपि भवन्ति । तान्यपि तेषामधिकमुपकारं कुर्वन्ति । बहुविधानि भोजनभाण्डानि नानाप्रकारकाणि पाकोपकरणानि च संगृह्यन्ते । इत्यादीनि यानि गृहस्थाः स्वनिर्वाहार्थं साराणि फल्गूनि चाहृत्य रक्षन्ति तानि सर्वाणि सामग्रीति कथ्यन्ते ।

३—भारतवर्षे प्राचीनप्रथानुसारं गृहस्थस्य पत्नी गृहलक्ष्मीरिव गृहकार्यवेक्षणे दत्तचित्ता तिष्ठति तस्याः कन्याः, कुमार्यः, नग्निका अपि तन्निदेशे तिष्ठन्ति ।

३—मध्यमा चिरण्टयस्सुवासिन्यो युवतयो वा स्नुषास्तां श्वश्रूं

सेवन्ते, पालयन्ति च तदाज्ञाम्। दासीजनोऽन्तर्गृहे कर्मकरो भवति मार्जन्या गृहं शोधयति, गोमयेन लिम्पति, भोजनभाण्डानि उच्छिष्टान्यनुच्छिष्टानि च मार्जयति। द्विदलतण्डुलचूर्णादीनि पाकोपयोगिद्रव्याण्यानीय महानसे धरति। गृहस्य कापि योषिद् द्विदलं रन्धयति, भक्तं पचति, रोटिकाः करोति बहुविधं शाकमपि एलालवंगमरिचजीरकधनीयकाद्युपदंशं दत्वा हिङ्गुजीरकादिभिर्घृतमर्जितैर्वा वासयित्वा संस्करोति। प्रथमं शिशवः खादन्ति। ततो यथाक्रमं भुङ्क्ते कुटुम्बम्। पर्वसु गृहस्थगृहेषूत्सवो भवति।

अहिंसा, सत्यवचनं, सर्वप्राणिषु दया, शमो, यथाशक्ति दानं च एष गार्हस्थो धर्मः कथ्यते। वेदपाठो, होमोऽतिथिपूजा, तर्पणं बलिवैश्वदेवश्चैते पञ्च महायज्ञाः प्रतिदिनं गृहस्थैः कर्तव्याः। दाराः पालनीयाः, पुत्राः पौत्राश्च पाठनीयाः, बुभुक्षिताः भोजनीयाः, वध्वः आदरणीयाः, ज्ञातयः संग्राह्याः। पुत्राणां पुत्रीणां च सदृशे कुले विवाहः कार्यः॥

चतुर्थः पाठः ।

## हट्टः

हट्टो जनानामतीवोपकारकः यतोऽत्रैवाभीप्सितवस्तूनि लभ्यन्ते। महाहट्टेषु विपणयः पङ्क्तिबद्धा वसतिरिव निर्मिता भवन्ति। तासामन्तो रथ्या भवन्ति, रथ्यानाम्पार्श्वयोश्चत्वराणि तेषु चत्वरेषु क्रय्यं वस्तुजातं प्रसार्य पणिकास्तद्विक्रीणते । क्रेतॄणां पादाहतिभिरुड्डीयधूलिः क्रय्यद्रव्येषु न पतेदित्यर्थं दृतिधरा दार्तिका वारिणा रथ्याः सिञ्चन्ति राजाज्ञया ।

तत्र यथाविभागं विभक्तोऽन्नापणो वस्त्रापणः शाकापणश्चेत्याद्यनेक आपणा भवन्ति । अन्नापणे शालयः, गोधूमाः, चणकाः, यवाः, मसूरा, मुद्गाः, आढकी चेत्याद्यनेकान्यन्नानि विक्रीयन्ते, ग्राहकास्तानि क्रीणन्ति भारिकैस्तानि गृहन्नीयन्ते । वस्त्रापणे देशकालानुकूलं क्रेतारो वस्त्राणि क्रीणन्ति, सौचिकानां ददति, ते सौचिकास्तद्वस्त्रस्य दैर्घ्यविस्तारयोर्मानं कुर्वन्ति। तत् ततो यो ग्राहको यादृशं सेवयति तादृक् कर्त्तर्य्या कर्त्तित्वा देहानुरूपं संतद्य सीव्यन्ति ।

अंगरक्षं चतुर्बन्धमूर्ध्ववस्त्रमधोवस्त्रं च परिषीव्यन्ति नीशारान् शीततौ विषीव्यन्ति, उत्तरीयं शीर्षण्यं च सीव्यन्ति, [1]उष्णीषस्योद्गमनीयस्य[2] शाट्या[3] वा स्यूतिर्न क्रियते अंगोञ्छनादीन्यप्यस्यूतान्येव रक्ष्यन्ते ।

---

१ पगड़ी, २ धोती, ३ साड़ी,

लवणापणे लावणिकाः, गुडापणे गौडिकाः, शाकापणे शाकिकाश्च स्वँ स्वँ भाण्डं विक्रेतुं दत्तचित्ता, इत इत इति स्वनैरर्थिन आहूय स्वलाभानुगुणं तत्तद्वस्तुविक्रयं कुर्वते ।

शाकवाटः प्रतिदिनं गम्यते, तत्रावश्यकतानुसारं लोकैर्वृन्ताकं, कूष्मांडं, सूरणं, शिम्बमित्यादि[१], यथारुचि क्रीणन्ति क्रेतारः, मूलकम्, सार्षपमपि[२] तत्रैव मिलंति । लशुनम्पलाण्डुश्चैव[३] लभ्यते । पूरिकापणे मिष्टान्ननिषद्यासु पूरिकाः, शष्कुली, कचौरी, पर्पटः, फेणी, पूपः, मोदकः, कुण्डलिनी, जाम्ववादीनि च बहुमिष्टान्नानि लभ्यन्ते नागरिकास्तदानीय स्वगृहे बालकेभ्यो वितरन्ति, दारेभ्यो ददति स्वयं च खादन्ति ।

फलापणे आम्रं, नारंगी, बहुविधं निम्बु, गोस्तनी,[४] कर्कटिका, चरभटिका,[५] द्राक्षा, चिञ्चादीनि[६] च बहूनि फलानि प्राप्यन्ते । आम्रं चूषन्ति, द्राक्षादीनि भुञ्जते, कर्कटिकां चर्वयन्ति, चिञ्चां लिहन्ति भोजनकाले ।

———

१ सेम । २ सरसों का साग, ३ प्याज, ४ छुहारा, ५ खीरा, ६ इमली ।

पञ्चमः पाठः

# जापानः ।

एशिया महाद्वीपस्य प्राच्यां दिशि जापानो नाम देशोऽस्ति। अत्र बहिर्गमनाय पोतानामावश्यकता भवति, यथास्ति "इङ्गलैण्ड" देशे अतोऽत्र षट्पञ्चाशत् पोताश्रयस्थानानि, पोताश्च सर्वविधाः सन्ति। जापानदेशः पार्वतो देशस्तत्रहि ज्वालामुखा अपि बहवः पर्वता विद्यन्ते, तत्र नद्यो बह्वयः परन्नातिदीर्घाः। तत्रत्या दीर्घतमा नदी केवलं सप्तत्यधिकशतं क्रोशार्द्धान्वहन्ती सिंधुना संगच्छते।

कासारास्तत्रानेके सन्ति परन्तेषु "विवा" नाम महाकासारोऽस्ति। यस्य पञ्चविंशतिक्रोशपरिमितन्दैर्घ्यं दशक्रोशपरिमितश्चायामः। द्वाविंशतिशतानि वर्षाणां व्यतीतानि यज्जापान एको महाभूचालोऽभवद् येनासंख्याः प्राणिनो मृता गृहाणि भग्नानि पतितानि च तस्मिन्नेवातिभयंकरं भूकम्पं भूमिर्विदीर्णा निस्सृतश्चायन्तद्गर्भान्महासरोवरः। स्वर्णं रजतं लौहं ताम्रं पाषाणमया अंगाराः सर्वप्रकारकप्रस्तराश्च देशेऽस्मिन्प्राप्यन्ते। प्रायो वर्षाणां द्वादशशतानि विगतानि सन्ति यज्जापानीयाः सुवर्णस्यानुसन्धानमकार्षुर्व्यलापयँश्च तत्। जापानश्चिरस्यान्यदेशैः समं व्यवहारन्नारचीदतस्तत्कनकं तत्रैव सञ्चितमासीत्।

जापानस्य पूर्वीयप्रदेशेष्वुत्तरीयप्रदेशेषु च बहुतरं शैत्यम्भवति हिमश्च वर्षति शीततौ, तथा पाश्चात्येषु दाक्षिणात्येषु च प्रदेशेष्वधिकमौष्ण्यम्भवति अल्पाल्पभूकम्पास्त्वनेकशोऽत्र भवन्ति




जापानः ।

परं हानिकारका अपि महान्तो भूकम्पा बहुधा जायन्ते । अत्र देशेऽन्यवस्तुकृषिभ्यः शालिकृषिर्बहुतरा क्रियत इति तण्डुला एव बहुधा तद्देशवासिनाम्भोजनम् । कांश्चित्पर्वतीयप्रदेशान् विना प्रदेशान्तरेषु बाहुल्येन बहुविधं शाकन्निष्पद्यते । सर्वविधानि फलानि तत्तद्वृक्षा प्राचुर्येण ददति च ।

अत्र देशे पालितपशुषु घोटकोऽनड्वान्, कुक्कुरो, बिडाली च भवति । वन्यास्तु हरिणा, भल्लूकः, शूकरः, कपिः, लोमाश* इत्यादयः पशवोऽवलोक्यन्ते ।

अस्मिन्देशे द्विचक्रैका गन्त्री भवति यान्तत्रत्या जिनरिक्षा इति कथयन्ति तस्या अत्र देशे बहुप्रचारोऽस्ति कदापि तामेक एव मनुष्यः कर्षति कदाचिच्च द्वौ जनौ कर्षतः ।

इह देशे विशालविशालसंसरणानां तटयोर्बहुतरा ग्रामास्तिष्ठन्ति, नगराणि च बहूनि व्यवस्थितानि सन्ति । तेषु 'टोकियो' 'ओजाका' 'किओटो' इमानि त्रीणि नगराणि सुमहान्ति सन्ति । "मिकाडो" इति जापानीयमहाराजस्योपाधिर्भवति । 'टोकियो' नगरं च साम्प्रतं तस्य राजधानी ।

इह देशे गृहाणि काष्ठमात्रोपादानरचितानि भवन्ति । पृथ्वीतो हस्तमात्रोच्छ्रायं दारुफलकनिबद्धभूमिः घासकटैरास्तृता भवति तेषाम् गृहाणाम् ।

समस्तेऽस्मिन्देशे सहस्रशः पाठशालाः सन्ति तासां व्ययधनं प्रायो राज्यकोषादेव प्रदीयते । ईदृगल्पतरं पाठनशुल्कञ्च दीयते

* लोमड़ इति हिन्दीभाषायाम् ।

यन्निर्धना अपि विद्यार्थिनः पठितुं शक्नुयुः । तत्र प्रतिग्राममुत्तमोत्तमं यद्भवनं दृश्यते तत्तु पाठशालास्थानमेव स्यात् । जापानदेशे तिस्रः कोट्यो जनसंख्यास्ति ।

तत्रत्या लोकाः 'शिन्टो' मतावलम्बिनो बौद्धाश्च सन्ति, जापानानाम्भाषा कयाचिदार्य्यभाषया सह साम्यन्न भजते ।

देशोऽयं सम्प्रत्युन्नतिशीलदेशेषु तत्रत्या लोकश्च सभ्यसमाजे गण्यते ।

---

षष्ठः पाठः ।

## गोपाल कृष्ण गोखले ।

महानुभावोऽयं राज्ञः प्रजावर्गस्य चोभयोर्हितैषी सम्मानपात्रञ्चाभूत् । अस्य स्वभावः सुसरलो विद्वत्ता च गम्भीरासीत् । एष सुवाग्मी वावदूकश्चाभवत् । अस्य जन्म त्रयोविंशत्यधिकैकोनविंशतिशततमे वैक्रमेऽब्दे कोल्हापुरनगरस्थे एकस्मिन्महाराष्ट्रब्राह्मणकुले जातम् । तस्मिन्नेव नगरेऽस्य प्रारम्भिकी शिक्षा बभूव । तदनन्तरमसौ मुम्बय्याम् "एलिफंस्टन कालेज" नाम्नि विद्यालये पठन्नास्ते । अलब्ध चाष्टादशवर्षावस्थायां "बी० ए०" उपाधिम् ।

तेषु दिनेषु "बी० ए०" उपाधिधारिणां सुवेतनान्युच्चपदानि मिलन्ति स्म । पुनरेष सुयोग्यविद्यार्थिषु श्रेष्ठत्वात्साम्राज्य उत्तमोत्तमम्पदं प्राप्तुमपारयत् । परमुदाराशयोऽयम्महाभागः स्वार्थबुद्धिमपहाय परार्थोपरि दृष्टिं ददौ निश्चिनोति स्म च यदध्यापकतां विधाय देशसेवा कर्तव्येति । अतः पुण्यपत्तनस्थे* "फरगुसन-कालेज" नाम्नि विद्यामन्दिरे स्वनिर्वाहमात्रां वृत्तिमङ्गीकृत्योपाध्यायतां ययौ चकार च विंशतिवर्षपर्य्यन्तं सुयोग्यतया तत्कार्यम् । एतस्मिन्नन्तरं तीक्ष्णबुद्धीनुदाराशयान् बहूनन्तेवासिन आत्मकल्पानकरोत् । येष्वेव पाठनधुरन्निहितवानसावधुना प्रकारान्तरेण देशसेवां कर्तुमारब्धवान् ।

तदित्थं यत्प्रजाजनस्य दशां शासकसमक्षं यथायथं निवेद्य

---

* पुण्यपत्तनं 'पूना' इति प्रसिद्धम् ।

सुधारितवान् । ततश्च भारतीयन्यवस्थकारिण्याः समितेः सभ्यो बभूव, तत्रापि प्रकृतीनां हितकाम्यया सुनीतिज्ञतया वाक्पटुतया च प्रकृतिहिताननेकान्नियमान्निर्मापयन्नासीत् । तत्र व्याख्यानावसरेऽनुत्तमस्य हृदयस्योदारभाव आविर्भूय विरेजे । महंच्चैष एष इङ्गलैण्डदेशं गत्वा भारतीयप्रजाहितसाधनोपायान् करोति स्म, प्रजासु च राजभक्तिम् प्रसारयति स्म ।

अफ्रीकामहाद्वीपस्थप्रवासिभारतीयानां कष्टं निशम्य त्वरितं तत्र जगाम । तत्रत्यशासकसमुदायेन प्रजावर्गेण प्रवासिभारतीयैश्च सम्मानितः सन् तत्रस्थभारतीयलोकमाश्वास्य साम्राज्यसाहाय्यद्वारा तेषान्तद्दुःखनिवारणाय प्रयत्नमकरोत् ।

सर्वथायं शान्तिप्रिय आसीत्, महाशयोऽसौ समाजमेकं स्थापितवान् यस्य नाम "भारतवर्षसेवकसमाज" इत्यस्ति । समाजस्यास्य सामाजिकाः सुयोग्या विद्वांस एव भवन्ति । तेषां स्वदेशसेवाकरणमेवैकमात्रं व्रतम् ।

एष समाजस्त्वद्यावधि स्थितोऽस्ति परन्त्वस्य स्थापयिता संसारेऽस्मिन्नास्ति ।

अनेन महात्मना न कदापि धनाशा कृता, नापि यशःकांक्षा, यदि कापीच्छा कृता तर्हि सा भारतवर्षस्य भारतीयानां च हितेच्छासीत् । इमामेव भारतहितेच्छाँ कार्यरूपे परिणतामप्यकार्षीत् । इत्थम्परोपकार एव लग्न आयुषोऽवसानत्वादेकसप्तत्यधिकोनविंशतिशततमेऽब्दे पुरन्दरपुराभ्यागतो जातः । युक्तमुक्तम्—परोपकाराय सतां विभूतय इति ॥

श्लोकः

परोपकारैकधियः स्वसुखाय गतस्पृहाः ।
जगद्धिताय जायन्ते साधवस्तत्समा भुवि ॥
सृजति तावदशेषगुणाकरं पुरुषरत्नमलङ्करणं भुवः ।
तदपि तत्क्षणभङ्गि करोति चेदहह कष्टमपण्डितता विधेः ॥

सप्तमः पाठः ।

# वीरवरः ( हितोपदेशविग्रहांशात् )

कश्चिद् वीरवरो नाम राजपुत्रः कुतश्चिद्देशादागत्य राजद्वारमुपगम्य शूद्रकप्रतीहारमुवाच । अहं तावद् वेतनार्थी राजपुत्रः, राजदर्शनं कारय । ततस्तेनासौ राजदर्शनं कारितो ब्रूते, देव यदि मया सेवकेन प्रयोजनमस्ति, तदास्मद्वर्तनं क्रियताम् । शूद्रक उवाच किं ते वर्तनम् ? वीरवरो ब्रूते । प्रत्यहं स्वर्णपञ्चशतानि देहि । राजाह । का ते सामग्री ? वीरवरो ब्रूते । द्वौ बाहू तृतीयश्च खड्गः । राजाह नैतच्छक्यम् । तच्छ्रुत्वा वीरवरश्चलितः । अथ मन्त्रिभिरुक्तम् । देव दिनचतुष्टयस्य वर्तनं दत्वा ज्ञायतामस्य स्वरूपं किमुपयुक्तोऽयमेतावद् वर्तनं गृह्णात्यनुपयुक्तो वेति । ततो मन्त्रिवचनादाहूय वीरवराय ताम्बूलं दत्त्वा पञ्चशतानि स्वर्णानि दत्तानि ॥

तद्विनियोगश्च राज्ञा सुनिभृतं निरूपितः । तदर्धं वीरवरेण देवेभ्यो ब्राह्मणेभ्यो दत्तम् स्थितस्यार्धं दुःखितेभ्यः तदवशिष्टं भोज्यव्ययविलासव्ययेन । एतत्सर्वं नित्यकृत्यं कृत्वा राजद्वारमहर्निशं खड्गपाणिः सेवते । यदा च राजा स्वयं समादिशति तदा स्वगृहमपि याति ।

अथैकदा कृष्णचतुर्दश्यां रात्रौ सकरुणक्रन्दनध्वनिं स राजा शुश्राव । शूद्रक उवाच । कः कोऽत्र द्वारि तिष्ठति ? तेनोक्तम् । देव ! अहं वीरवरः । राजोवाच । क्रन्दनानुसरणं क्रियताम् । वीरवरो यथाज्ञापयति देव इत्युक्त्वा चलितः । राज्ञा च चिन्तितम्नैतदुचितम् । अयमेकाकी राजपुत्रो मया सूचीभेद्ये तमसि

प्रेरितः । अहमपि तदनु गत्वा किमेतदिति निरूपयामि । ततो राजापि खड्गमादाय तदनुसरणक्रमेण नगराद् बहिर्निर्जगाम। ततो गत्वा च वीरवरेण रुदती रूपयौवनसम्पन्ना सर्वालंकार-भूषिता काचित् स्त्री दृष्टा। पृष्टा च का त्वं। किमर्थं रोदिषि। स्त्रियोक्तम्। 'अहमेतस्य शूद्रकस्य राजलक्ष्मीः। चिरादेतस्य भुजच्छायायां महता सुखेन विश्रान्ता। इदानीमन्यत्र गमिष्यामि'। वीरवरो ब्रूते— 'यत्रापायस्सम्भवति तत्रोपायोऽप्यस्ति तत्कथं स्यात्पुनरिहावलम्बनं भवत्याः।' लक्ष्मीरुवाच। 'यदि त्वमात्मनः पुत्रं शक्तिधरं द्वात्रिंशल्लक्षणोपेतं भगवत्याः सर्वमङ्गलाया उपहारीकरोषि तदाहम्पुनरत्र सुचिरं निवसामि।' इत्युक्त्वादृश्याभवत्।

ततो वीरवरेण स्वगृहं गत्वा निद्रायमाणा स्ववधूः प्रबोधिता पुत्रश्च। तौ निद्रां परित्यज्योत्थायोपविष्टौ। वीरवरस्तत्सर्वं लक्ष्मीवचनमुक्तवान्। तच्छ्रुत्वा सानन्दः शक्तिधरो ब्रूते। 'धन्योऽहमेवंभूतः स्वामिराज्यरक्षार्थं यन्ममोपयोगः। श्लाघ्य एवंविधे कर्मणि देहस्य विनियोगः श्लाघ्यः।

धनानि जीवितं चैव परार्थे प्राज्ञ उत्सृजेत्।
तन्निमित्तो वरं त्यागो विनाशे नियते सति॥'

शक्तिधरमातोवाच 'यद्येतन्न कर्त्तव्यन्तत्केनाप्यन्येन कर्मणा मुख्यस्य महावर्तनस्य निष्क्रया भविष्यति। तत्कोऽधुना विलंबस्य हेतुः'। इत्यालोच्य सर्वे सर्वमङ्गलायाः स्थाने गताः। तत्र सर्वमङ्गलां संपूज्य वीरवरो ब्रूते—'देवि प्रसीद, विजयतां विजयतां शूद्रको महाराजः। गृह्यतामुपहारः'। इत्युक्त्वा पुत्रस्य शिरश्छिच्छेद।

ततो वीरवरश्चिन्तयामास । गृहीतराजवर्तनस्य निस्तारः कृतः। अधुना निष्पुत्रस्य जीवनेनालम् । इत्यालोच्यात्मनः शिरश्छेदः कृतः। ततः स्त्रियापि स्वामिपुत्रशोकार्तया तदनुष्ठितम्। एतत्सर्वं दृष्ट्वा राजा साश्चर्यं चिन्तयामास।

जीवन्ति च म्रियन्ते च मद्विधाः क्षुद्रजन्तवः।
अनेन सदृशो लोके न भूतो न भविष्यति॥

तदेतेन परित्यक्तेन मम स्वराज्येनाप्यप्रयोजनम्। ततः शूद्रकेणापि स्वशिरश्छेत्तुं खड्गः समुत्थापितः। अथ भगवत्या सर्वमङ्गलया राजा हस्ते धृत उक्तश्च। 'पुत्र प्रसन्नास्मि ते। एतावता साहसेनालम्। जीवनान्तेऽपि तव राज्यभंगो नास्ति'। राजा च साष्टाङ्गपातं प्रणम्योवाच। 'देवि मे राज्येन जीवितेन वा किं प्रयोजनम्? यद्यहमनुकंपनीयस्तदा ममायुःशेषेणायं वीरवरो सदारपुत्रो जीवतु। अन्यथाहं यथाप्राप्तां गतिं गच्छामि'। भगवत्युवाच। 'पुत्र अनेन ते सत्वोत्कर्षेण भृत्यवात्सल्येन च तव तुष्टास्मि गच्छ विजयी भव। अयमपि सपरिवारो राजपुत्रो जीवतु'। इत्युक्त्वा देव्यदृश्याभवत्। ततो वीरवरः सपुत्रदारो गृहं गतः' राजापि तैरलक्षितः सत्वरमन्तःपुरं प्रविष्टः।

अथ प्रभाते वीरवरो द्वारस्थः पुनर्भूपालेन पृष्टः सन्नाह। देव! सा रुदती मामवलोक्यादृश्याभवत्। न काप्यन्या वार्ता विद्यते। तद् वचनमाकर्ण्य राजाचिन्तयत्—कथमयं श्लाघ्यो महासत्त्वः।!

ततः स राजा प्रातः शिष्टसभां कृत्वा सर्ववृत्तान्तं प्रस्तुत्य प्रसादात् तस्मै कर्णाटराज्यं ददौ।

---

अष्टमः पाठः ।

# त्रयो धूर्ता ब्राह्मणश्च

अस्ति गौतमस्यारण्यं प्रस्तुतयज्ञः कश्चिद् ब्राह्मणः । स च यज्ञार्थं ग्रामान्तराच्छागमुपक्रीय स्कन्धे कृत्वा गच्छन्धूर्तत्रयेणावलोकितः । ततस्ते धूर्ता यद्येष छागः केनाप्युपायेन लभ्यते तदा मतिप्रकर्षो भवतीति समालोच्य वृक्षत्रयतले क्रोशान्तरेण तस्य ब्राह्मणस्यागमनं प्रतीक्ष्य पथि स्थिताः । तत्रैकेन धूर्तेन गच्छन्स ब्राह्मणोऽभिहितः—'भो ब्राह्मण, किमिति कुक्कुरः स्कन्धेनोह्यते ।' विप्रेणोक्तम्—'नायं श्वा, किंतु यज्ञच्छागः ।' अथानन्तरस्थितेनान्येन धूर्तेन तथैवोक्तम् । तदाकर्ण्य ब्राह्मणश्छागं भूमौ निधाय मुहुर्निरीक्ष्य पुनः स्कंधे कृत्वा दोलायमानमतिश्चलितः । यतः ।

मतिर्दोलायते सत्यं सतामपि खलोक्तिभिः ।
ताभिर्विश्वासितश्चासौ म्रियते चित्रकर्णवत् ॥

राजाह—'कथमेतत् ।' स कथयति—

अस्ति कस्मिंश्चिद्वनोद्देशे मदोत्कटो नाम सिंहः । तस्य सेवकास्त्रयः काको व्याघ्रो जम्बुकश्च । अथ तैर्भ्रमद्भिः सार्थाद्भ्रष्टः कश्चिदुष्ट्रो दृष्टः पृष्टश्च—'कुतो भवानागतः ।' स चात्मवृत्तान्तमकथयत् । ततस्तैर्नीत्वा सिंहेऽसौ समर्पितः । तेनाभयवाचं दत्वा चित्रकर्ण इति नाम कृत्वा स्थापितः । अथ कदाचित्सिंहस्य शरीरवैकल्याद्भूरिवृष्टिकारणाच्चाहारमलभमानास्ते व्यग्रा बभूवुः । ततस्तैरालोचितम्—'चित्रकर्णमेव यथा स्वामी व्यापादयति तथानुष्ठीयताम् । किमनेन कण्टकभुजा ।' व्याघ्र उवाच—'स्वामिनाभयवाचं

दत्वानुगृहीतः, तत्कथमेवं संभवति.।' काको ब्रूते—'इह समये परिक्षीणः स्वामी पापमपि करिष्यति । यतः ।

त्यजेत्क्षुधार्ता महिला स्वपुत्रं
खादेत्क्षुधार्ता भुजगी स्वमण्डम् ।
बुभुक्षितः किं न करोति पापं
क्षीणा नरा निष्करुणा भवन्ति ॥

अन्यच्च ।

'मत्तः प्रमत्तश्चोन्मत्तः श्रान्तः क्रुद्धो बुभुक्षितः ।
लुब्धो भीरुस्त्वरायुक्तः कामुकश्च न धर्मवित्' ॥

इति संचिन्त्य सर्वे सिंहान्तिकं जग्मुः । सिंहेनोक्तम्—'आहारार्थं किंचित्प्राप्तम् ?' तैरुक्तम्—'यत्नादपि न प्राप्तं किंचित्' । सिंहेनोक्तम्—'कोऽधुना जीवनोपायः' । काको वदति—'देव, स्वाधीनाहारपरित्यागात्सर्वनाशोऽयमुपस्थितः ।' सिंहेनोक्तम्—'अत्राहारः कः स्वाधीनः' । काकः कर्णे कथयति—'चित्रकर्णः' इति । सिंहो भूमिं स्पृष्ट्वा कर्णौ स्पृशति । 'अभयवाचं दत्वा धृतोऽयमस्माभिः । तत्कथमेवं संभवति । तथा च ।

न भूप्रदानं न सुवर्णदानं
न गोप्रदानं न तथान्नदानम् ।
यथा वदन्तीह महाप्रदानं
सर्वेषु दानेष्वभयप्रदानम् ॥

३

अन्यच्च ।

सर्वकामसमृद्धस्य अश्वमेधस्य यत्फलम् ।
तत्फलं लभते सम्यग्रक्षिते शरणागते' ॥

काको ब्रूते—'नासौ स्वामिना व्यापादयितव्यः । किंत्वस्माभिरेव तथा कर्तव्यं यथासौ स्वदेहदानमङ्गीकरोति' । सिंहस्तच्छ्रुत्वा तूष्णीं स्थितः । ततोऽसौ लब्धावकाशः कूटं कृत्वा सर्वानादाय सिंहान्तिकं गतः । अथ काकेनोक्तम्—'देव, यत्नादप्याहारो न प्राप्तः । अनेकोपवासखिन्नः स्वामी । तदिदानीं मदीयं मांसमुपभुज्यताम् । यतः ।

'स्वामिमूला भवन्त्येव सर्वाः प्रकृतयः खलु ।
समूलेष्वेव वृक्षेषु प्रयत्नः सफलो नृणाम्' ॥

सिंहेनोक्तम्—'वरं प्राणपरित्यागो न पुनरीदृशि कर्मणि प्रवृत्तिः' । जम्बुकेनापि तथोक्तम् । ततः सिंहेनोक्तम्—'मैवम्' । अथ व्याघ्रेणोक्तम्—'मद्देहेन जीवतु स्वामी' । सिंहेनोक्तम्—'न कदाचिदेवमुचितम्' । अथ चित्रकर्णोऽपि जातविश्वासस्तथैवात्मदानमाह । ततस्तद्वचनात्तेन व्याघ्रेणासौ कुक्षिं विदार्य व्यापादितः सर्वैर्भक्षितश्च । अतोऽहं ब्रवीमि—'मतिर्दोलायते सत्यम्' इत्यादि ॥ ततस्तृतीयधूर्तवचनं श्रुत्वा स्वमतिभ्रमं निश्चित्य छागं त्यक्त्वा ब्राह्मणः स्नात्वा गृहं ययौ । स छागस्तैर्धूर्तैर्नीत्वा भक्षितः ।

---

नवमः पाठः ।

# रामाभिषेकप्रस्तावः । (१)

## ( वाल्मीकीयरामायणात् )

गतेष्वथ नृपो भूयः पौरेषु सह मन्त्रिभिः ।
मन्त्रयित्वा ततश्चक्रे निश्चयज्ञः स निश्चयम् ॥१॥
श्व एव पुष्यो भविता श्वोऽभिष्येच्यस्तु मे सुतः ।
रामो राजीवपत्राक्षो युवराज इति प्रभुः ॥२॥
अथान्तर्गृहमाविश्य राजा दशरथस्तदा ।
सूतमामन्त्रयामास, रामं पुनरिहानय ॥३॥
प्रतिगृह्य तु तद्वाक्यं सूतः पुनरुपाययौ ।
रामस्य भवनं शीघ्रं राममानयितुं पुनः ॥४॥
द्वाःस्थैरावेदितं तस्य रामायागमनं पुनः ।
श्रुत्वैव चापि रामस्तं प्राप्तं शङ्कान्वितोऽभवत् ॥५॥
प्रवेश्य चैनं त्वरितो रामो वचनमब्रवीत् ।
यदागमनकृत्यं ते भूयस्तद्ब्रूह्यशेषतः ॥६॥
तमुवाच ततः सूतो राजा त्वां द्रष्टुमिच्छति ।
श्रुत्वा प्रमाणं तत्र त्वं गमनायेतराय* वा ॥७॥
इति सूतवचः श्रुत्वा रामोऽपि त्वरयान्वितः ।
प्रययौ राजभवनं पुनर्द्रष्टुं नरेश्वरम् ॥८॥

---

* आर्षोऽयं प्रयोगः ।

तं श्रुत्वा समनुप्राप्तं रामं दशरथो नृपः ।
प्रवेशयामास गृहं विवक्षुः (१) प्रियमुत्तमम् ॥९॥
प्रविशन्नेव च श्रीमान् राघवो भवनं पितुः ।
ददर्श पितरं दूरात् प्रणिपत्य कृताञ्जलिः ॥१०॥
प्रणमन्तं तमुत्थाप्य संपरिष्वज्य भूमिपः ।
प्रदिश्य चासनं चास्मै रामं च पुनरब्रवीत् ॥११॥
राम ! वृद्धोऽस्मि दीर्घायुर्भुक्ता भोगा यथेप्सिताः ।
अन्नवद्भिः क्रतुशतैर्यथेष्टं भूरिदक्षिणैः ॥१२॥
जातमिष्टमपत्यं मे त्वमेवानुपमं भुवि ।
दत्तमिष्ट (२) मधीतं च मया पुरुषसत्तम ! ॥१३॥
अनुभूतानि चेष्टानि (३) मया वीर सुखान्यपि ।
देवर्षि-पितृ-विप्राणामनृणोऽस्मि तथात्मनः ॥१४॥
न किञ्चिन्मम कर्त्तव्यं तवान्यत्राभिषेचनात् ।
अतो यत्त्वामहं ब्रूयां तन्मे त्वं कर्त्तुमर्हसि ॥१५॥
अद्य प्रकृतयः सर्वास्त्वामिच्छन्ति नराधिपम् ।
अतस्त्वां युवराजानमभिषेक्ष्यामि पुत्रक ॥१६॥
अपि चाद्याशुभान् राम ! स्वप्नान् पश्यामि राघव ।
सनिर्घातादिवोल्काश्च पतन्ति हि महास्वनाः ॥१७॥

---

(१) ब्रुवः, वचेर्वा सनन्तादुः, कर्त्तरि, वक्तुमिच्छुरित्यर्थः ।

(२) यजतेः कर्मणि क्तः ।

(३) इषेः कर्मणि क्तः ।

अवष्टब्धं च मे राम नक्षत्रं दारुणैर्ग्रहैः ।
आवेदयन्ति दैवज्ञाः सूर्याङ्गारकराहुभिः ॥१८॥
प्रायेण च निमित्तानामीदृशानां समुद्भवे ।
राजा हि मृत्युमाप्नोति घोरां चापदमृच्छति ॥१९॥
तद्यावदेव मे चेतो न विमुह्यति राघव ।
तावदेवाभिषिंचस्व चला हि प्राणिनां मतिः ॥२०॥
अद्य चन्द्रोऽभ्युपगमत् पुष्यात्पूर्वं पुनर्वसुम् ।
श्वः पुष्ययोगं नियतं वक्ष्यन्ते दैवचिन्तकाः ॥२१॥
तत्र पुष्येऽभिषिंचस्व मनस्त्वरयतीव माम् ।
श्वस्त्वाहमभिषेक्ष्यामि यौवराज्ये परंतप ॥२२॥
तस्मात्त्वयाद्यप्रभृति निशेयं नियतात्मना ।
सह वध्वोपवस्तव्या दर्भप्रस्तरशायिना ॥२३॥
सुहृदश्चाप्रमत्तास्त्वां रक्षन्त्वद्य समंततः ।
भवन्ति बहुविघ्नानि कार्याण्येवंविधानि हि ॥२४॥
विप्रोषितश्च भरतो यावदेव पुरादितः ।
तावदेवाभिषेकस्ते प्राप्तकालो मतो मम ॥२५॥
कामं खलु सतां वृत्ते भ्राता ते भरतः स्थितः ।
ज्येष्ठानुवर्त्ती धर्मात्मा सानुक्रोशो जितेन्द्रियः ॥२६॥
किन्तु चित्तं मनुष्याणामनित्यमिति मे मतम् ।
सतां च धर्म्मनित्यानां कृतशोभि च राघव ॥२७॥
इत्युक्तः सोऽभ्यनुज्ञातः श्वोभाविन्यभिषेचने ।
व्रजेति रामः पितरमभिभाष्याभ्ययाद् गृहम् ॥२८॥

प्रविश्य चात्मनो वेश्म राज्ञादिष्टेऽभिषेचने ।
तत्क्षणादेव निष्क्रम्य मातुरन्तःपुरं ययौ ॥२९॥
तत्र तां प्रवणामेव मातरं क्षौमवासिनीम् ।
वाग्यतां देवतागारे ददर्शायाचतीं श्रियम् ॥३०॥
प्रागेव चागता तत्र सुमित्रा लक्ष्मणस्तथा ।
सीता चानायिता श्रुत्वा प्रियं रामाभिषेचनम् ॥३१॥
तस्मिन् कालेऽपि कौसल्या तस्थावामीलितेक्षणा ।
सुमित्रयान्वास्यमाना सीतया लक्ष्मणेन च ॥३२॥
श्रुत्वा पुष्ये च पुत्रस्य यौवराज्येऽभिषेचनम् ।
प्राणायामेन पुरुषं ध्यायमाना जनार्दनम् ॥३३॥
तथा सनियमामेव सोऽभिगम्याभिवाद्य च ।
उवाच वचनं रामो हर्षयँस्तामिदं वरम् ॥३४॥
अम्ब ! पित्रा नियुक्तोऽस्मि प्रजापालनकर्मणि ।
भविता श्वोऽभिषेको मे यथा मे शासनं पितुः ॥३५॥
सीतयाप्युपवस्तव्या रजनीयं मया सह ।
एवमुक्तमुपाध्यायैः स हि मामुक्तवान् पिता ॥३६॥
यानि यान्यत्रयोग्यानि श्वो भाविन्यभिषेचने ।
तानि मे मङ्गलान्यद्य वैदेह्याश्चैव कारय ॥३७॥
एतच्छ्रुत्वा तु कौसल्या चिरकालाभिकाङ्क्षितम् ।
हर्षबाष्पाकुलं वाक्यमिदं राममभाषत ॥३८॥
वत्स राम ! चिरञ्जीव हतास्ते परिपन्थिनः ।
ज्ञातीन्मे त्वं श्रियायुक्तः सुमित्रायाश्च नन्दय ॥३९॥

कल्याणे बत नक्षत्रे मया जातोऽसि पुत्रक ।
येन त्वया दशरथो गुणैराराधितः पिता ॥४०॥
अमोघं बत मे क्षान्ते पुरुषे पुष्करेक्षणे ।
येयमिक्ष्वाकुराजश्रीः पुत्र त्वां संश्रयिष्यति ॥४१॥
इत्येवमुक्तो मात्रा तु रामो भ्रातरमब्रवीत् ।
प्राञ्जलिं प्रह्वमासीनमभिवीक्ष्य स्मयन्निव ॥४२॥
लक्ष्मणेमां मया सार्धं प्रशाधि त्वं वसुंधराम् ।
द्वितीयं मेऽन्तरात्मानं त्वामियं श्रीरुपस्थिता ॥४३॥
सौमित्रे ! भुङ्क्ष्व भोगाँस्त्वमिष्टान् राज्यफलानिच ।
जीवितं चापि राज्यं च त्वदर्थमभिकामये ॥४४॥
इत्युक्त्वा लक्ष्मणं रामो मातारावभिवाद्य च ।
अभ्यनुज्ञाप्य सीतां च ययौ स्वं च निकेतनम् ॥४५॥

---

दशमः पाठः ।

# रामाभिषेकप्रस्तावः(२)

( रामायणात् )

सन्दिश्य रामं नृपतिः श्वोभाविन्यभिषेचने ।
पुरोहितं समाहूय वसिष्ठमिदमब्रवीत् ॥१॥
गच्छोपवासं काकुत्स्थं कारयाद्य तपोधन ।
श्रेयसे राज्यलाभाय वध्वा सह यतव्रत ॥२॥
तथेति च स राजानमुक्त्वा वेद-विदां वरः ।
स्वयं वसिष्ठो भगवान् ययौ रामनिवेशनम् ॥३॥
उपवासयितुं वीरं मन्त्रविन्मन्त्रकोविदम् ।
ब्राह्मं रथवरं युक्तमास्थाय सुधृतव्रतः ॥४॥
स रामभवनं प्राप्य पाण्डुराभ्रघनप्रभम् ।
तिस्रः कक्ष्या रथैनैव विवेश मुनिसत्तमः ॥५॥
तमागतमृषिं रामस्त्वरन्निव ससंभ्रमम् ।
मानयिष्यन् समानार्हं निश्चक्राम निवेशनात् ॥६॥
अभ्येत्य त्वरमाणोऽथ रथाभ्याशं* मनीषिणः
ततोऽवतारयामास परिगृह्य रथात्स्वयम् ॥७॥
स चैनं प्रश्रितं दृष्ट्वा संभाष्याभिप्रसाद्य च ।
प्रियार्हं हर्षयन् रामामित्युवाच पुरोहितः ॥८॥

---

* रथसमीपमित्यर्थः

प्रसन्नस्ते पिता राम यत्त्वं राज्यमवाप्स्यसि ।
उपवासं भवानद्य करोतु सह सीतया ॥९॥
प्रातस्त्वामभिषेक्ता हि यौवराज्ये नराधिपः ।
पिता दशरथः प्रीत्या ययातिं नहुषो यथा ॥१०॥
इत्युक्त्वा स तदा राममुपवासं यतव्रतः ।
मन्त्रवत् कारयामास वैदेह्या सहितं शुचिः ॥११॥
ततो यथावद्रामेण स राज्ञो गुरुरर्चितः ।
अभ्यनुज्ञाप्य काकुत्स्थं ययौ रामनिवेशनात् ॥१२॥
सुहृद्भिस्तत्र रामोऽपि सहासीनः प्रियंवदैः ।
सभाजितो विवेशाथताननुज्ञाप्य सर्वशः ॥१३॥
हृष्टनारीनरयुतं रामवेश्म तदा बभौ ।
यथा मत्तद्विजगणं* प्रफुल्लनलिनं सरः ॥१४॥
स राजभवनप्रख्यात्तस्माद्रामनिवेशनात् ।
निर्गत्य ददृशे मार्गं वसिष्ठो जनसंवृतम् ॥१५॥
वृन्दवृन्दैरयोध्यायां राजमार्गाः समंततः ।
बभूवुरभिसंबाधाः कुतूहलजनैर्वृताः ॥१६॥
जनवृन्दोर्मिसंघर्षहर्षस्वनवृतस्तदा ।
बभूव राजमार्गस्य सागरस्येव निःस्वनः ॥१७॥
सिक्तसम्मृष्टरथ्या हि तथा च वनमालिनी ।
आसीदयोध्या तदहः समुच्छ्रित गृहध्वजा ॥१८॥

---

* द्विजाः पक्षिणः ।

तदाह्ययोध्यानिलयः सस्त्रीबालाकुलो जनः ।
रामाभिषेकमाकाङ्क्षन्नाकाङ्क्षन्नुदयं रवेः ॥१९॥
प्रजालङ्कारभूतं च जनस्यानन्दवर्धनम् ।
उत्सुकोऽभूज्जनो द्रष्टुं तमयोध्यामहोत्सवम् ॥२०॥
एवं तज्जनसंबाधं राजमार्गं पुरोहितः ।
व्यूहन्निव जनौघं तं शनैराजकुलं ययौ ॥२१॥
सिताभ्रशिखरप्रख्यं प्रासादमधिरुह्य च ।
समीयाय नरेन्द्रेण शक्रेणेव बृहस्पतिः ॥२२॥
तमागतमभिप्रेक्ष्य हित्वा राजासनं नृपः ।
पप्रच्छ स्वमतं तस्मै कृतमित्यभ्यवेदयत् ॥२३॥
तेन चैव तदा तुल्यं सहासीनाः सभासदः ।
आसनेभ्यः समुत्तस्थुः पूजयन्तः पुरोहितम् ॥२४॥
गुरुणा त्वभ्यनुज्ञातो मनुजौघं विसृज्य तम् ।
विवेशान्तःपुरं राजा सिंहो गिरिगुहामिव ॥२५॥
तदग्र्यवेषप्रमदाजनाकुलं महेन्द्रवेश्मप्रतिमं निवेशनम् ।
व्यदीपयँश्चारु विवेश पार्थिवः शशीव तारागणसंकुलं नभः ॥२६॥

---

एकादशः पाठः ।

# नकुलोपाख्यानम् ।

(महाभारतात्)

## जनमेजय उवाच ।

पितामहस्य मे यज्ञे धर्मराजस्य धीमतः ।
यदाश्चर्यमभूत्किञ्चित्तद्भवान् वक्तुमर्हति ॥१॥

## वैशम्पायन उवाच ।

श्रूयतां राजशार्दूल महदाश्चर्यमुत्तमम् ।
अश्वमेधे महायज्ञे निवृत्ते यदभूत्प्रभो ॥२॥
तर्पितेषु द्विजाग्र्येषु ज्ञातिसंबन्धिबन्धुषु ।
दीनान्धकृपणे* वाऽपि तदा भरतसत्तम ॥३॥
घुष्यमाणे महादाने दिक्षु सर्वासु भारत ।
पतत्सु पुष्पवर्षेषु धर्मराजस्य मूर्धनि ॥४॥
बिलान्निस्सृत्य नकुलो रुक्मपार्श्वस्तदाऽनघ ।
वज्राशनिसमं नादममुञ्चद्वसुधाधिप ॥५॥
सकृदुत्सृज्य तन्नादं त्रासयानो मृगद्विजान्† ।
मानुषं वचनं प्राह पुष्पोपरिशयो महान् ॥६॥
सक्तुप्रस्थेन वो नायं यज्ञस्तुल्यो नराधिपाः ।
उञ्छवृत्तेर्वदान्यस्य कुरुक्षेत्रनिवासिनः ॥७॥
तस्य तद्वचनं श्रुत्वा नकुलस्य विशांपते ।
विस्मयं परमं जग्मुः सर्वे ते ब्राह्मणर्षभाः ॥८॥

---

* कृपणो दुर्बलः † पशुपक्षिणः ।

ततः समेत्य नकुलं पर्यपृच्छन्त ते द्विजाः ।
कुतस्त्वं समनुप्राप्तो यज्ञं साधुसमागमम् ॥९॥
किं बलं परमं तुभ्यं किं श्रुतं किं परायणम् ।
कथं भवन्तं विद्याम यो नो यज्ञं विगर्हसे ॥१०॥
अविलुप्यागमं कृत्स्नं विविधैर्यज्ञियैः कृतम् ।
यथागमं * यथान्यायं कर्त्तव्यं च तथा कृतम् ॥११॥
पूजार्हाः पूजिताश्चात्र विधिवच्छास्त्रदर्शनात् ।
मन्त्राहुतिहुतश्चाग्निर्दत्तं देयममत्सरम् ॥१२॥
तुष्टा द्विजातयश्चात्र दानैर्बहुविधैरपि ।
क्षत्रियाश्च सुयुद्धेन श्राद्धैश्चापि पितामहाः ॥१३॥
पालनेन विशस्तुष्टाः कामैस्तुष्टा वरस्त्रियः ।
अनुक्रोशैस्तथा शूद्रा दानशेषैः पृथग्जनाः ॥१४॥
ज्ञातिसम्बन्धिनस्तुष्टाः शौचेन च नृपस्य नः ।
देवा हविर्भिः पुण्यैश्च रक्षणैः शरणागताः ॥१५॥
यदत्र तथ्यं तद्ब्रूहि सत्यं सत्यं द्विजातिषु ।
यथाश्रुतं यथादृष्टं पृष्टो ब्राह्मणकाम्यया ॥१६॥
श्रद्धेयवाक्यः प्राज्ञस्त्वं दिव्यं रूपं बिभर्षि च ।
समागतश्च विप्रैस्त्वं तद्भवान् वक्तुमर्हति ॥१७॥
इति पृष्टो द्विजैस्तैः स प्रहसन्नकुलोऽब्रवीत् ।
नैषा मृषा मया वाणी प्रोक्ता दर्पेण वा द्विजाः ॥१८॥

---

* यथाशास्त्रम् ।

यन्मयोक्तमिदं वाक्यं युष्माभिश्चाप्युपश्रुतम् ।
सक्तुप्रस्थेन वो नायं यज्ञस्तुल्यो द्विजर्षभाः ॥१९॥
इत्यवश्यं मयैतद्वो वक्तव्यं द्विजसत्तमाः ।
श्रृणुताव्यग्रमनसः शंसतो मे यथातथम् ॥२०॥
अनुभूतं च दृष्टं च यन्मयाऽद्भुतमुत्तमम् ।
उञ्छवृत्तेर्वदान्यस्य कुरुक्षेत्रनिवासिनः ॥२१॥
स्वर्गं येन द्विजः प्राप्तः सभार्यः ससुतस्नुषः ।
यथा चार्धं शरीरस्य ममेदं काञ्चनीकृतम् ॥२२॥

नकुल उवाच ।

हन्त वो कथयिष्यामि दानस्य फलमुत्तमम् ।
न्यायलब्धस्य सूक्ष्मस्य विप्रदत्तस्य यद्द्विजाः ॥२३॥
धर्मक्षेत्रे कुरुक्षेत्रे धर्मज्ञैर्बहुभिर्वृते ।
उञ्छवृत्तिर्द्विजः कश्चित्कापोतिरभवत्पुरा * ॥२४॥
सभार्यः सहपुत्रेण सस्नुषस्तपसि स्थितः ।
बभूव शुक्लवृत्तः स धर्मात्मा नियतेन्द्रियः ॥२५॥
षष्ठे काले सदा विप्रो भुङ्क्ते तैः सह संवृतः ॥२६॥
षष्ठे काले कदाचित्तु तस्याहारो न विद्यते ।
भुङ्क्तेऽन्यस्मिन्कदाचित्स षष्ठे काले द्विजोत्तमः ॥२७॥
कपोतधर्मिणस्तस्य दुर्भिक्षो सति दारुणे ।
नाविद्यत तदा विप्राः संचयस्तन्निबोधत ॥२८॥

---

* कपोत इव कणान् चिनोति तेभ्य एव जीवति च ।

† त्रिषु दिनेषु एकवार मेव तेन भोजनं कृतं ।

क्षीणौषधिसमावापो* द्रव्यहीनोऽभवत्तदा ।
काले कालेऽस्य संप्राप्ते नैव विद्येत भोजनम् ॥२९॥
क्षुधापरिगताः सर्वे प्रातिष्ठन्त तदा तु ते ।
उञ्छं तदा शुक्लपक्षो मध्यं तपति भास्करे ॥३०॥
उष्णार्तश्च क्षुधार्तश्च विप्रस्तपसि संस्थितः ।
उञ्छमप्राप्तवानेव ब्राह्मणः क्षुच्छ्रमान्वितः ॥३१॥
स तथैव क्षुधाविष्टः सार्धं परिजनेन ह ।
क्षपयामास तं कालं कृच्छ्रप्राणो द्विजोत्तमः ॥ ३२ ॥
अथ षष्ठे गते काले यवप्रस्थ† मुपार्जयन् ।
यवप्रस्थं तु तं सक्तूनकुर्वन्त तपस्विनः ॥ ३३ ॥
कृतजप्याह्निकास्ते तु हुत्वा चाग्निं यथाविधि ।
कुडवं ‡ कुडवं सर्वे व्यभजन्त तपस्विनः ॥ ३४ ॥
अथागच्छद् द्विजः कश्चिदतिथिर्भुञ्जतां तदा ।
ते तं दृष्ट्वाऽतिथिं प्राप्तं प्रहृष्टमनसोऽभवन् ॥ ३५ ॥
तेऽभिवाद्य सुखप्रश्नं पृष्ट्वा तमतिथिं तदा ।
विशुद्धमनसो दान्ताः श्रद्धादमसमन्विताः ॥ ३६ ॥
अनसूया गतक्रोधाः साधवो वीतमत्सराः ।
त्यक्तमानमदक्रोधा धर्मज्ञा द्विजसत्तमाः ॥ ३७ ॥
सब्रह्मचर्यं गोत्रं ते तस्य ख्यात्वा परस्परम् ।
कुटीं प्रवेशयामासुः क्षुधार्तमतिथिं तदा ॥ ३८ ॥

---

* अन्नागमरहितः ।
† प्रस्थस्तु चतुष्कुडवपरिमाणो भवति ।
‡ कुडवस्तु द्वात्रिंशत्तोलिकापरिमाणो भवति ।

इदमर्घ्यं च पाद्यं च* बृसी चेयं तवानघ ।
शुचयः सक्तवश्चेमे नियमोपार्जिताः प्रभो ।
प्रतिगृह्णीष्व भद्रं ते मया दत्ता द्विजर्षभ ॥ ३९ ॥
इत्युक्तः प्रतिगृह्याथ सक्तूनां कुडवं द्विजः ।
भक्षयामास राजेन्द्र न च तुष्टिं जगाम सः ॥ ४० ॥
स उञ्छवृत्तिस्तं प्रेक्ष्य क्षुधापरिगतं द्विजम् ।
आहारं चिन्तयामास कथं तुष्टो भवेदिति ॥ ४१ ॥
तस्य भार्याब्रवीद्वाक्यं मद्भागो दीयतामिति ।
गच्छत्वेष यथाकामं परितुष्टो द्विजोत्तमः ॥ ४२ ॥
इति ब्रुवन्तीं तां साध्वीं भार्यां स द्विजसत्तमः ।
क्षुधापरिगतां ज्ञात्वा तान्सक्तून्नाभ्यनन्दत ॥ ४३ ॥
आत्मानुमानतो विद्वान् स तु विप्रर्षभस्तदा ।
जानन्वृद्धां क्षुधार्तां च श्रान्तां ग्लानां तपस्विनीम् ।
त्वगस्थिभूतां वेपन्तीं ततो भार्यामुवाच ह ॥ ४४ ॥
अपि कीटपतङ्गानां मृगाणां चैव शोभने ।
स्त्रियो रक्ष्याश्च पोष्याश्च न त्वेवं वक्तुमर्हसि ॥ ४५ ॥
अनुकम्प्यो नरः पत्न्या पुष्टो रक्षित एव च ।
प्रपतेद्यशसो दीप्तात्स च लोकान्न चाप्नुयात् ॥ ४६ ॥
धर्मकामार्थकार्याणि शुश्रूषाकुलसंततिः ।
दारेष्वधीनो धर्मश्च पितृणामात्मनस्तथा ॥ ४७ ॥

---

* आसनम् ।

न वेत्ति कर्मतो भार्यारक्षणे योऽक्षमः पुमान्।
अयशो महदाप्नोति नरकांश्चैव गच्छति ॥ ४८ ॥
इत्युक्ता सा ततः प्राह धर्माथौं नौ समौ द्विज।
सक्तुप्रस्थचतुर्भागं गृहाणेमं प्रसीद मे ॥ ४९ ॥
सत्यं रतिश्च धर्मश्च स्वर्गश्च गुणनिर्जितः।
स्त्रीणां पतिसमाधीनं काङ्क्षितं च द्विजर्षभ ॥ ५० ॥
पालनाद्धि पतिस्त्वं मे भर्तासि भरणाच्च मे।
पुत्रप्रदानाद्वरदस्तस्मात्सक्तून्प्रयच्छ मे ॥ ५१ ॥
जरापरिगतो वृद्धः क्षुधार्तो दुर्बलो भृशम्।
उपवासपरिश्रान्तो यदा त्वमपि कर्शितः ॥ ५२ ॥
इत्युक्तः स तया सक्तून्प्रगृह्येदं वचोऽब्रवीत्।
द्विज सक्तूनिमान्भूयः प्रतिगृह्णीष्व सत्तम ॥ ५३ ॥
स तान्प्रगृह्य भुक्त्वा च न तुष्टिमगमद्द्विजः।
तमुञ्छवृत्तिरालक्ष्य ततश्चिन्तापरोऽभवत् ॥ ५४ ॥

पुत्र उवाच।

सक्तूनिमान्प्रगृह्य त्वं देहि विप्राय सत्तम।
इत्येव सुकृतं मन्ये तस्मादेतत्करोम्यहम् ॥ ५५ ॥
भवान् हि परिपाल्यो मे सर्वदैव प्रयत्नतः।
साधूनां काङ्क्षितं यस्मात्पितुर्वृद्धस्य पालनम् ॥ ५६ ॥
पुत्रार्थो विहितो ह्येष वार्धके परिपालनम्।
श्रुतिरेषा हि विप्रर्षे त्रिषु लोकेषु शाश्वती ॥ ५७ ॥

प्राणधारणमात्रेण शक्यं कर्त्तुं तपस्त्वया।
प्राणोहि परमो धर्मः स्थितो देहेषु देहिनाम् ॥ ५८ ॥

## पितोवाच ।

अपि वर्षसहस्री त्वं बाल एव मतो मम ।
उत्पाद्य पुत्रं हि पिता कृतकृत्यो भवेत्सुतात् ॥ ५९ ॥
बालानां क्षुद्बलवती जानाम्येतदहं प्रभो ।
वृद्धोऽहं धारयिष्यामि त्वं बली भव पुत्रक ॥ ६० ॥
जीर्णेन वयसा पुत्र न मां क्षुद्बाधतेऽपि च ।
दीर्घकालं तपस्तप्तं न मे मरणतो भयम् ॥ ६१ ॥

## पुत्र उवाच ।

अपत्यमस्मि ते पुंसस्त्राणात्पुत्र इति स्मृतः ।
आत्मा पुत्रः स्मृतस्तस्मात्त्राह्यात्मानमिहात्मना ॥ ६२ ॥

## पितोवाच ।

रूपेण सदृशस्त्वं मे शीलेन च दमेन च ।
परीक्षितश्च बहुधा सक्तूनादद्मि ते सुत ॥ ६३ ॥
इत्युक्त्वाऽऽदाय तान्सक्तून्प्रीतात्मा द्विजसत्तमः ।
प्रहसन्निव विप्राय स तस्मै प्रददौ तदा ॥ ६४ ॥
भुक्त्वा तानपि सक्तून्स नैव तुष्टो बभूव ह ।
उञ्छवृत्तिस्तु धर्मात्मा व्रीडामनुजगाम ह ॥ ६५ ॥
तं वै वधूः स्थिता साध्वी ब्राह्मणप्रियकाम्यया ।
सक्तूनादाय संतुष्टा श्वशुरं वाक्यमब्रवीत् ॥ ६६ ॥

संतानात्तव संतानं मम विप्र भविष्यति ।
सक्तूनिमानतिथये गृहीत्वा संप्रयच्छ मे ॥ ६७ ॥
तव प्रसादान्निर्वृत्ता मम लोकाः किलाक्षयाः ।
पुत्रेण तानवाप्नोति यत्र गत्वा न शोचति ॥ ६८ ॥
पितॄनृणात्तारयति पुत्र इत्यनुशुश्रुम ।
पुत्रपौत्रैश्च नियतं साधुलोकानुपाश्नुते ॥ ६९ ॥

## श्वशुर उवाच ।

वातातपविशीर्णाङ्गीं त्वां विवर्णां निरीक्ष्य वै ।
कर्शितां सुव्रताचारे क्षुधाविह्वलचेतसम् ॥ ७० ॥
कथं सक्तून्ग्रहीष्यामि भूत्वा धर्मोपघातकः ।
कल्याणवृत्ते कल्याणि नैवं त्वं वक्तुमर्हसि ॥ ७१ ॥
षष्ठे काले व्रतवतीं शौचशीलतपोन्विताम् ।
कृच्छ्रवृत्तिं निराहारां द्रक्ष्यामि त्वां कथं शुभे ॥ ७२ ॥
बाला क्षुधार्त्ता नारी च रक्ष्या त्वं सततं मया ।
उपवासपरिश्रान्ता त्वं हि बान्धवनन्दिनी ॥ ७३ ॥

## स्नुषोवाच ।

गुरोर्मम गुरुस्त्वं वै यतो दैवतदैवतम् ।
देवातिदेवस्तस्मात्त्वं सक्तूनादत्स्व मे प्रभो ॥ ७४ ॥
देहः प्राणश्च धर्मश्च शुश्रूषार्थमिदं गुरोः ।
तव विप्र प्रसादेन लोकान्प्राप्स्यामहे शुभान् ॥ ७५ ॥
अवेक्ष्या इति कृत्वाऽहं दृढभक्तेति वा द्विज ।
चिन्त्या ममेयमिति वा सक्तूनादातुमर्हसि ॥ ७६ ॥

**श्वशुर उवाच ।**

अनेन नित्यं साध्वी त्वं शीलवृत्तेन शोभसे ।
या त्वं धर्मव्रतोपेता गुरुवृत्तिमवेक्षसे ॥ ७७ ॥
तस्मात्सक्तून्ग्रहीष्यामि वधु नार्हसि वञ्चनाम् ।
गणयित्वा महाभागे त्वां हि धर्मभृतांवरे । ७८ ॥
इत्युक्त्वा तानुपादाय सक्तून्प्रादाद् द्विजातये ।
ततस्तुष्टोऽभवद्विप्रस्तस्य साधोर्महात्मनः ॥ ७९ ॥
प्रीतात्मा स तु तं वाक्यमिदमाह द्विजर्षभम् ।
वाग्मी तदा द्विजश्रेष्ठो धर्मः पुरुषविग्रहः ॥ ८० ॥
शुद्धेन तव दानेन न्यायोपात्तेन धर्मतः ।
यथाशक्तिविसृष्टेन प्रीतोऽस्मि द्विजसत्तम ॥ ८१ ॥
अहो दानं घुष्यते ते स्वर्गे स्वर्गनिवासिभिः ।
गगनात्पुष्पवर्षं च पश्येदं पतितं भुवि ॥ ८२ ॥
सुरर्षिदेवगन्धर्वा ये च देवपुरःसराः ।
स्तुवन्तो देवदूताश्च स्थिता दानेन विस्मिताः ॥ ८३ ॥
ब्रह्मर्षयो विमानस्था ब्रह्मलोकचराश्च ये ।
काङ्क्षन्ते दर्शनं तुभ्यं दिवं व्रज द्विजर्षभ ॥ ८४ ॥
पितृलोकगताः सर्वे तारिताः पितरस्त्वया ।
अनागताश्च बहवः सुबहूनि युगान्युत ॥ ८५ ॥
ब्रह्मचर्येण दानेन यज्ञेन तपसा तथा ।
अगह्वरेण * धर्मेण तस्माद्गच्छ दिवं द्विज ॥ ८६ ॥

* छलरहितेन ।

श्रद्धया परया यस्त्वं तपश्चरसि सुव्रत ।
तस्माद्देवास्तवानेन प्रीता ब्राह्मणसत्तम ॥ ८७ ॥
सर्वमेतद्धि यस्मात्ते दत्तं शुद्धेन चेतसा ।
कृच्छ्रकाले ततः स्वर्गो विजितः कर्मणा त्वया ॥ ८८ ॥
क्षुधा निर्णुदति प्रज्ञां धर्मबुद्धिं व्यपोहति ।
क्षुधापरिगतज्ञानो धृतिं त्यजति चैव ह ॥ ८९ ॥
बुभुक्षां जयते यस्तु स स्वर्गं जयते ध्रुवम् ।
यदा दानरुचिः स्याद्वै तदा धर्मो न सीदति ॥ ९० ॥
अनवेक्ष्य सुतस्नेहं कलत्रस्नेहमेव च ।
धर्ममेव गुरुं ज्ञात्वा तृष्णा न गणिता त्वया ॥ ९१ ॥
द्रव्यागमो नृणां सूक्ष्मः पात्रे दानं ततः परम् ।
कालः परतरो दानाच्छ्रद्धा चैव ततः परा ॥ ९२ ॥
स्वर्गद्वारं सुसूक्ष्मं हि नरैर्मोहान्न दृश्यते ।
सङ्गार्गलं लोभकीलं रागगुप्तं दुरासदम् ॥ ९३ ॥
तन्तु पश्यन्ति पुरुषा जितक्रोधा जितेन्द्रियाः ।
ब्राह्मणास्तपसा युक्ता यथाशक्ति प्रदायिनः ॥ ९४ ॥
सहस्रशक्तिश्च शतं शतशक्तिर्दशापि च ।
दद्यादपश्च यः शक्त्या सर्वे तुल्यफलाः स्मृताः ॥ ९५ ॥
रन्तिदेवो* हि नृपतिरपः प्रादादकिंचनः ।
शुद्धेन मनसा विप्र नाकपृष्ठं ततो गतः ॥ ९६ ॥

---

* रन्तिदेवश्चन्द्रवंशीयस्सङ्कृतिपुत्रो याज्ञिको वदान्यश्च नृप आसीत् । एतस्य यज्ञेषु हतानाम्पशूनां चर्मरसेन चर्मण्वती नदी जातेति पौराणिकी कथा । अधुनेयन्नदी चम्बलनाम्ना प्रसिद्धा ॥

न धर्मः प्रीयते तात दानैर्दत्तैर्महाफलैः ।
न्यायलब्धैर्यथा सूक्ष्मैः श्रद्धापूतैः स तुष्यति ॥ ९७ ॥
गोप्रदानसहस्राणि द्विजेभ्योऽ दान्नृगो नृपः ।
एकां दत्वा स पारक्यां नरकं समपद्यत ॥ ९८ ॥
आत्ममांसप्रदानेन शिबिरौशीनरो * नृपः ।
प्राप्य पुण्यकृतांल्लोकान्मोदते दिवि सुव्रतः ॥ ९९ ।
विभवेन नृणां पुण्यं यच्छक्त्या स्वार्जितं न तन् ।
न यज्ञैर्विविधैर्विप्र यथान्यायेन संचितैः ॥ १०० ॥

---

* शिबिस्तु राजविशेष उशीनरराजपुत्र आसीत् । सत्यदानरतं त जिज्ञासार्थमिन्द्रः श्येनरूपधरोऽग्निश्च कपोतरूपधरो जातः । कपोतः श्येनेना नुगम्यमानः शिबिम्प्रति गत्वा त्राहि माम्पृथ्वीपाल शरणार्थ्यहमित्यवदत् शरणागतं तं स आश्वासयामास । तदनन्तरं श्येनो राजानमुपगम्य प्रोवाच 'अयं जीवो धात्रा मम भक्ष्यो विहितः, अतः एतं समुत्सृज ।' स श्येनमा 'अयन्त्राणार्थी सम्प्राप्तः सन्निधौ मम, तस्मात्तवाहन्न समर्पयिष्ये । इ कपोतकं वर्जयित्वा यदन्यत्कामयसे तदहन्तुभ्यम्प्रयच्छामि ।' श्येनः प्रा 'यद्येवं तर्हि कपोतस्यास्य तुल्यानि स्वमांसानि मे देहि' । राजोवा 'तथास्तु' । एवमुक्त्वा स नृपः स्वमांसानि उत्कृत्य कपोतेन समं तोलय मास । परन्तु कपोतो व्यत्यरिच्यत, पुनश्चोत्कृत्य मांसानि पार्थिवः प्रादात् परन्तु कपोतेन समं न जातानि । अन्ततो गत्वा क्षीणमांसः स सा स्वयं तुलामारुहत् । तस्मिन् समारूढे सति पुष्पवर्षम्पपात, राजा पूर्वावस्थां प्राप्तः । शक्रस्तदा स्वरूपं धृत्वाऽवदत् 'हे राजन् ते भद्रम अहमिन्द्रोऽयमग्निः, आवान्त्वां जिज्ञासमानौ यज्ञमुपागतौ, तव शाश्व कीर्त्तिस्त्रिषु लोकेषु भविष्यति, त्वञ्चिरम्महीमिमां पालयित्वा ब्रह्मलो गमिष्यसि' । एवमुक्त्वेन्द्राग्नी त्रिदशालयं जग्मतुः ।

क्रोधाद्दानफलं हन्ति लोभात्स्वर्गं न गच्छति ।
न्यायवृत्तिर्हि तपसा दानवित्स्वर्गमश्नुते ॥१०१॥
न राजसूयैर्बहुभिरिष्ट्वा विपुलदक्षिणैः ।
न चाश्वमेधैर्बहुभिः फलं सममिदं तव ॥१०२॥
सक्तुप्रस्थेन विजितो ब्रह्मलोकस्त्वयाऽक्षयः ।
विरजो ब्रह्मसदनं गच्छ विप्र यथासुखम् ॥१०३॥
सर्वेषां वो द्विजश्रेष्ठ दिव्यं यानमुपस्थितम् ।
आरोहत यथाकामं धर्मोऽस्मि द्विज पश्य माम् ॥१०४॥
पावितो हि त्वया देहो लोके कीर्त्तिः स्थिरा च ते ।
सभार्यः सहपुत्रश्च सस्नुषश्च दिवं व्रज ॥१०५॥
इत्युक्तवाक्ये धर्मे तु यानमारुह्य स द्विजः ।
सदारः ससुतश्चैव सस्नुषश्च दिवं गतः ॥१०६॥
तस्मिन् विप्रे गते स्वर्गं ससुते सस्नुषे तदा ।
भार्याचतुर्थे धर्मज्ञ ततोऽहं निःसृतो बिलात् ॥१०७॥
ततस्तु सक्तुगन्धेन क्लेदेन सलिलस्य च ।
दिव्यपुष्पविमर्दाच्च साधोर्दानलवैश्च तैः ॥१०८॥
विप्रस्य तपसा तस्य शिरो मे काञ्चनीकृतम् ।
तस्य सत्याभिसन्धस्य सक्तुदानेन चैव ह ॥१०९॥
शरीरार्द्धं च मे विप्राः शातकुम्भमयं* कृतम् ।
पश्यतेमं सुविपुलं तपसा तस्य धीमतः ॥११०॥

---

* शातकुम्भ स्वर्णम् ।

कथमेवंविधं स्याद्वै पार्श्वमन्यदिति द्विजाः ।
तपोवनानि यज्ञांश्च दृष्टोऽभ्येमि पुनः पुनः ॥१११॥
यज्ञं त्वहमिमं श्रुत्वा कुरुराजस्य धीमतः ।
आशया परया प्राप्तो न चाहं काञ्चनीकृतः ॥११२॥
ततो मयोक्तं तद्वाक्यं प्रहस्य ब्राह्मणर्षभाः ।
सक्तुप्रस्थेन यज्ञोऽयं संमितो नेति सर्वथा ॥११३॥
सक्तुप्रस्थलवैस्तैर्हि तदाहं काञ्चनीकृतः ।
नहि यज्ञो महानेष सदृशस्तैर्मतो मम ॥११४॥
इत्युक्त्वा नकुलः सर्वान् यज्ञे द्विजवरांस्तदा ।
जगामादर्शनं तेषां विप्रास्ते च ययुर्गृहान् ॥११५॥

---

# अथ चक्रव्याकरणम् ।

—:o:—

व्याकरणमस्मान् लेखनभाषणयोः शुद्धां रीतिं शिक्षयति। तत्र १ वर्णविचारः, २ शब्दविचारः, ३ वाक्यविचारश्चेति त्रयो विषया भवन्ति।

१ वर्णविचारेऽक्षराणामाकारः, उच्चारणं, उच्चारणस्थानादीनि च वर्ण्यन्ते।

२ शब्दविचारे शब्दभेदानां तथा तेषां व्युत्पत्तेश्च वर्णनं भवति।

३ वाक्यविचारे कारकपदसंयुक्ता क्रिया वाक्यं कथ्यते, तस्यैव रचनाप्रकारो भवति।

## (१) अथ वर्णसमाम्नायः (वर्णमाला) ।

अ, इ, उ, ऋ, ऌ = ह्रस्वस्वराः

आ, ई, ऊ, ॠ, ए, ऐ, ओ, औ = दीर्घस्वराः

— स्वराः[1], अचः । — एते प्लुता अपि भवन्ति ।

क ख ग घ ङ = कु, कवर्गः ।

च छ ज झ ञ = चु, चवर्गः ।

ट ठ ड ढ ण = टु, टवर्गः ।

त थ द ध न = तु, तवर्गः ।

प फ ब भ म = पु, पवर्गः ।

— स्पर्शाः

य र ल व = अन्तस्थाः ।

श ष स ह = ऊष्माणः ।

क्ष त्र ज्ञ = संयुक्ताक्षराणि ।

— व्यञ्जनानि[2], हलः ।

ः = विसर्गः "स्, र्", स्थाने भवति ।

ं = अनुस्वारः "न्, म्," स्थाने भवति ।

— अयोगवाहौ अनुस्वार-विसर्गौ स्वरात् परौ भवतः

ँ = अनुनासिकम्, चन्द्रबिन्दुर्वा ।

— अक्षराणि, वर्णाः ।

---

१ एकमात्रो ह्रस्वः । द्विमात्रो दीर्घः । त्रिमात्रः प्लुतः । स्वराणां ह्रस्व-दीर्घप्लुतभेदाः परस्परं सवर्णाः । स्वयं राजन्ते इति स्वराः ।

२ अर्धमात्रिकं व्यञ्जनम् । स्वरसहायतां विना व्यञ्जनस्योच्चारणं नास्ति ।

## (२) वर्णोच्चारणस्थानानि ।

अ, कु, ह[1], विसर्गाः = कंठ्याः—कण्ठः स्थानम् ।

इ, चु, य, शाः = तालव्याः—तालु स्थानम् ।

ऋ, टु, र, षाः = मूर्धन्याः—मूर्धा-स्थानम् ।

ऌ, तु, ल, साः = दन्त्याः—दन्ताः स्थानम् ।

उ, पु = ओष्ठ्याः—ओष्ठः स्थानम् ।

ए, ऐ = कण्ठतालव्यौ—कण्ठतालुस्थानम् ।

ओ, औ = कण्ठौष्ठ्यौ—कण्ठोष्ठं स्थानम् ।

व = दन्तोष्ठ्यः—दन्तौष्ठं स्थानम् ।

---

१ पञ्चमवर्गयुक्तोन्तस्थसंयुतश्च हकारः औरस्यः, असंयुतः कण्ठ्यः ।

श्रीः

# सोदाहरणः स्वरसन्धिः ।

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| अ | + | अ | = | आ, | यथा | शश | + | अङ्कः | = | शशाङ्कः । |
| अ | + | आ | = | आ, | यथा | रत्न | + | आकरः | = | रत्नाकरः । |
| आ | + | अ | = | आ, | यथा | दया | + | अर्णवः | = | दयार्णवः । |
| आ | + | आ | = | आ, | यथा | विद्या | + | आलयः | = | विद्यालयः । |
| अ | + | इ | = | ए, | यथा | देव | + | इन्द्रः | = | देवेन्द्रः । |
| अ | + | ई | = | ए, | यथा | गण | + | ईशः | = | गणेशः । |
| अ | + | उ | = | ओ, | यथा | सूर्य | + | उदयः | = | सूर्योदयः । |
| अ | + | ऊ | = | ओ, | यथा | गृह | + | ऊर्द्ध्वम् | = | गृहोर्द्ध्वम् । |
| अ | + | ऋ | = | अर्, | यथा | देव | + | ऋषिः | = | देवर्षिः । |
| अ | + | ए | = | ऐ, | यथा | अद्य | + | एव | = | अद्यैव । |
| अ | + | ऐ | = | ऐ, | यथा | मत | + | ऐक्यम् | = | मतैक्यम् । |
| अ | + | ओ | = | औ, | यथा | जल | + | ओघः | = | जलौघः । |
| अ | + | औ | = | औ, | यथा | चित्त | + | औदार्यम् | = | चित्तौदार्यम् । |

आकारस्याप्येवमेव सन्धयो भवन्ति ।

| | | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|---|
| इ | + | अ | = | य, | यथा | कवि | + | अत्र | = | कव्यत्र । |
| इ | + | आ | = | या, | यथा | कवि | + | आगतः | = | कव्यागतः । |
| इ | + | इ | = | ई, | यथा | गिरि | + | इन्द्रः | = | गिरीन्द्रः । |
| इ | + | ई | = | ई, | यथा | क्षिति | + | ईशः | = | क्षितीशः । |
| इ | + | उ | = | यु, | यथा | कवि | + | उदयः | = | कव्युदयः । |
| इ | + | ऊ | = | यू, | यथा | प्रति | + | ऊहः | = | प्रत्यूहः । |
| इ | + | ऋ | = | यृ, | यथा | मुनि | + | ऋषभः | = | मुन्यृषभः । |
| इ | + | ए | = | ये, | यथा | प्रति | + | एकः | = | प्रत्येकः । |
| इ | + | ऐ | = | यै, | यथा | अति | + | ऐश्वर्यम् | = | अत्यैश्वर्यम् । |

इ + ओ = यो, यथा पचति + ओदनम् = पचत्योदनम्

इ + औ = यौ, यथा अति + औदार्यम् = अत्यौदार्यम् ।

ईकारस्याप्येवमेव सन्धयो भवन्ति ।

उ + अ = व, यथा अनु + अगमत् = अन्वगमत् ।

उ + आ = वा, यथा सु + आसनम् = स्वासनम् ।

उ + इ = वि, यथा मधु + इदम् = मध्विदम् ।

उ + ई = वी, यथा साधु + ईहितम् = साध्वीहितम् ।

उ + उ = ऊ, यथा स्वादु + उदकम् = स्वादूदकम् ।

उ + ऊ = ऊ, यथा लघु + ऊर्मिः = लघूर्मिः ।

उ + ऋ = वृ, यथा मधु + ऋते = मध्वृते ।

उ + ए = वे, यथा अनु + एषणम् = अन्वेषणम् ।

उ + ऐ = वै, यथा अनु + ऐक्षिष्ट = अन्वैक्षिष्ट ।

उ + ओ = वो, यथा पचतु + ओदनम् = पचत्वोदनम् ।

उ + औ = वौ, यथा ददतु + औषधम् = ददत्वौषधम् ।

ऊकारस्याप्येवमेव सन्धयो भवन्ति ।

ऋ + अ = र, यथा पितृ + अनुमतिः = पित्रनुमतिः ।

ऋ + आ = रा, यथा पितृ + आदेशः = पित्रादेशः ।

ऋ + इ = रि, यथा पितृ + इच्छा = पित्रिच्छा ।

ऋ + ई = री, यथा पितृ + ईहितम् = पित्रीहितम् ।

ऋ + उ = रु, यथा पितृ + उपदेशः = पित्रुपदेशः ।

ऋ + ऊ = रू, यथा पितृ + ऊहः = पित्रूहः ।

ऋ + ऋ = ॠ, यथा पितृ + ऋद्धिः = पितॄद्धिः ।

ऋ + ए = रे, यथा पितृ + एषणा = पित्रेषणा ।

ऋ + ऐ = रै, यथा पितृ + ऐश्वर्यम् = पित्रैश्वर्यम् ।

ऋ + ओ = रो, यथा पितृ + ओकः = पित्रोकः ।

ऋ + औ = रौ, यथा पितृ + औदार्यम् = पित्रौदार्यम् ।

ॠकारस्याप्येवमेव सन्धयो भवन्ति ।

